॥ श्रीरामकृष्ण परमहंसोपनिषत् ॥

ॐ सह नाववतु ।
सह नौ भुनक्तु ।
सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ अथ श्रीरामकृष्ण परमहंसोपनिषदं
व्याख्यास्यामः ।
सैषाऽपरोक्षानुभवरूढा साधनप्रधाना च ॥ १॥

निर्गुणं निराकारं च परं ब्रह्म ।
तदेव भक्तजनानां शीतल भक्तेः प्रभावात्
सगुणः साकारः परमेश्वरो भवति हिममिव
जलात् शैत्यात् ।
स एव परमेश्वरो निखिलजगदंतर्यामी च ॥ २॥

राम-कृष्ण-शिव-विष्णु-गॉडल्लेत्यादि
विविधनामभिर्निर्दिष्टं परंतत्त्वमपि स एव ।
स एव लक्ष्मी-दुर्गा-काली-सरस्वतीत्यादि
देवीनामभिरपि निर्दिश्यते ॥ ३॥

व्यवहारदशायां यत्र पुरुषोऽज्ञो द्वैतमिव
पश्यति तदा काल्यादि देव्यः परस्यैव ब्रह्मणः
शक्तय इति मन्तव्यम् । दाहिकशक्तिर्यथाग्नेः ।
वस्तुतस्तु तयोरत्यंतमभेदः एव ॥४॥

परमेश्वरदर्शनमेव मानव जीवनस्य चरमोद्देशः ।
तथैव मुक्तेः साध्यत्वात् ।
परमेश्वरस्तु द्रष्टुं स्प्रष्टुं च शक्यः ।
तेन सहालापोऽपि साध्यः ।
सर्वे धर्माः समानास्तमेव गमयंति च ॥ ५॥

अपि तु मायाजवनिकाच्छन्नः स सुखेन द्रष्टुं
न लभ्यः ।
कामकांचन कामनैव माया ।

तदपगमे सः स्वयमेवाविर्भवति मेघापायेंऽशुमानिव ।
ज्ञानमिश्रित भक्तिश्च मायानाशोपायः ।
स एव सर्वमित्यतो दीनदरिद्ररोग्यज्ञादीनां
नारायणदृष्ट्या सेवाऽप्यद्यतनकालेऽ-
अनुत्तमोपायश्चित्तशुद्धिद्वारा तं
साक्षात्कर्तुम् ॥ ६॥

कथंचित्तं ज्ञात्वा दृष्ट्वा स्पृष्ट्वा
भवबन्धनाद्विमुक्ता भवत ।
विमुक्ता भवतेत्युपनिषत् ॥ ७॥

ॐ शान्तिः शान्तिः शान्तिः ॥

॥ इति स्वामी हर्षानन्दकृत उपनिशत्समाप्ता ॥